॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

## तिङन्ते

# अदादयः



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar


**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।

सूचना— यह अध्ययन सामग्री पूर्णतः निश्शुल्क है तथा इस पर कोई कॉपीराइट भी नहीं हैं। हमारे द्वारा निर्मित इसी प्रकार की अन्य शिक्षण समग्री को हमारे इस अकाउंट https://archive.org/details/@sanskrit_sar से डाउनलोड करें।

दिनाङ्कः-

29.11.2021


अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा


निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदादिगणे धातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

## अथ परस्मैपदिनः

| | |
|---|---|
| 1. अदँ भक्षणे | 10. प्सा भक्षणे |
| 2. हनँ हिंसागत्योः | 11. रा दाने |
| 3. यु मिश्रणामिश्रणयोः | 12. ला आदाने |
| 4. या प्रापणे | 13. दाप् लवने |
| 5. वा गतिगन्धनयोः | 14. पा रक्षणे |
| 6. भा दीप्तौ | 15. ख्या प्रकथने |
| 7. ष्णा शौचे | 16. विदँ ज्ञाने |
| 8. श्रा पाके | 17. असँ भुवि |
| 9. द्रा कुत्सायां गतौ | 18. इण् गतौ |

## अथात्मनेपदिनः

1. शीङ् स्वप्ने
2. इङ् अध्ययने

## अथोभयपदिनः

1. दुहँ प्रपूरणे
2. दिहँ उपचये
3. लिहँ आस्वादने
4. ब्रूञ् व्यक्तायां वाचि
5. ऊर्णुञ् आच्छादने

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘अद्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अद्+ति = अत्ति | अद्+तस् = अत्तः | अद्+अन्ति = अदन्ति |
| मध्यमः | अद्+सि = अत्सि | अद्+थस् = अत्थः | अद्+थ = अत्थ |
| उत्तमः | अद्+मि = अद्मि | अद्+वस् = अद्वः | अद्+मस् = अद्मः |

अदँ भक्षणे॥ १॥

❖ शपो लुक्-विधायकं विधिसूत्रम्—

सूत्रम्— अदिप्रभृतिभ्यः शपः (२,४.७२)

अर्थः— लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः।

❖ घस्लृँ-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— लिँट्यन्यतरस्याम् (२,४.४०)

अर्थः— अदो घस्लृँ वा स्याल्लिँटि। जघास।

अद् + लँट्
अद् शप् + तिप्
अद् अ + ति
अत् + ति (खरि च)
अत्ति

अद् + लिँट्
घस् + तिप्
घस् + अ (णल्)
घस् घस् + अ
घ घस् + अ

झ घस् + अ
ज घस् + अ
ज घास् + अ
जघास

घस् + अतुस्
घस् घस् + अतुस्
जघ् स् + अतुस्
(गमहनजनखनघसां लोपः क्ङित्यनङि)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'अद्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | जघास<br>आद | जक्षतुः<br>आदतुः | जक्षुः<br>आदुः |
| मध्यमः | जघसिथ<br>आदिथ | जक्षथुः<br>आदथुः | जक्ष<br>आद |
| उत्तमः | जघास, जघस<br>आद | जक्षिव<br>आदिव | जक्षिम<br>आदिम |

जघ् स् + अतुस्
जघ् ष् + अतुस्
जक् ष् + अतुस् (खरि च)
जक्षतुः

अद् अद्+ अ
आद् अद्+ अ
आ अद्+ अ
आद

उपधालोपः॥ घस्य चर्त्वम्—

❖ षत्व-विधायकं विधिसूत्रम्—

सूत्रम्— शासि-वसि-घसीनां च (८,३.६०)

अर्थः— इण्कुभ्यां परस्यैषां सस्य षः स्यात्। (घस्य चर्त्वम्॥)

जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास, जघस। जक्षिव। जक्षिम। आद। आदतुः। आदुः॥

❖ इडागम-विधायकं विधिसूत्रम्—

सूत्रम्— इडत्त्यर्तिव्ययतीनाम् (७,२.६६)

(पदच्छेदः— इड्+अत्ति+अर्ति-व्ययतीनाम्)

अर्थः— अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आदिथ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'अद्' धातोः प्रक्रिया (लुँट्-लृँट्-लौँट्)

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अत्तास् + आ = अत्ता | अत्तास् + रौ = अत्तारौ | अत्तास् + रस् = अत्तारः |
| मध्यमः | अत्तास्+सि = अत्तासि | अत्तास्+थस् = अत्तास्थः | अत्तास्+थ = अत्तास्थ |
| उत्तमः | अत्तास्+मि = अत्तास्मि | अत्तास्+वस् = अत्तास्वः | अत्तास्+मस् = अत्तास्मः |
| प्रथमः | अत्स्य + ति = अत्स्यति | अत्स्य + तस् = अत्स्यतः | अत्स्य + अन्ति = अत्स्यन्ति |
| मध्यमः | अत्स्य + सि = अत्स्यसि | अत्स्य + थस् = अत्स्यथः | अत्स्य + थ = अत्स्यथ |
| उत्तमः | अत्स्य + मि = अत्स्यामि | अत्स्य + वस् = अत्स्यावः | अत्स्य + मस् = अत्स्यामः |

अत्ता। अत्स्यति। अत्तु। अत्तात्। अत्ताम्। अदन्तु॥

❖ धि-विधायकं विधिसूत्रम्—

सूत्रम्— हु-झल्भ्यो हेर्धिः (६,४.१०१)

अर्थः— होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि।

अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम॥




अद्+ सि
अद्+ हि
अद्+ धि

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अद्+ तु-तात् | अद्+ ताम् | अद्+ अन्तु |
| मध्यमः | अद्+ धि | अद्+ तम् | अद्+ त |
| उत्तमः | अद्+ आनि | अद्+ आव | अद्+ आव |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘अद्’ धातोः प्रक्रिया (लँङ्-लिँङौ)

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | आ+अद् + अट् त् = आदत् | आ+अद् + ताम् = आत्ताम् | आद् + अन् = आदन् |
| मध्यमः | आद् + अट् स् = आदः | आद् + तम् = आत्तम् | आद् + त = आत्त |
| उत्तमः | आद्+ अम् = आदम् | आद्+ व = आद्व | आद्+ म = आद्म |
| प्रथमः | अद् + यास् त् = अद्यात् | अद्या + ताम् = अद्याताम् | अद्या + उस् (जुस्) = अद्युः (उस्यपदान्तात्) |
| मध्यमः | अद्या + स् = अद्याः | अद्या + तम् = अद्यातम् | अद्या + त = अद्यात |
| उत्तमः | अद्या + अम् = अद्याम् (अमि पूर्वः) | अद्या + व = अद्याव | अद्या + म = अद्याम |

❖ अट्-विधायकं विधिसूत्रम्—

**सूत्रम्— अदः सर्वेषाम् (७,३.१००)**

**अर्थः—** अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः॥

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अद् + यास् त् = अद्यात् | अद्यास्+ ताम् अद्यास्ताम् | अद्यास्+ उस् अद्यासुः |
| मध्यमः | अद्यास्+ स् अद्याः | अद्यास्+ तम् अद्यास्तम् | अद्यास्+ त अद्यास्त |
| उत्तमः | अद्यास्+ अम् | अद्यास्+ व | अद्यास्+ म |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'अद्' धातोः प्रक्रिया (लुँङ्-लृँङौ)

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अद् + लुँङ्/त्<br>अघस् च्लि + त्<br>अघस् अङ् + त्<br>अघसत् | अघसताम् | अघसन् |
| मध्यमः | अघसः | अघसतम् | अघसत |
| उत्तमः | अघसम् | अघसाव | अघसाम |

❖ घस्लादेश-विधायकं विधिसूत्रम्—

सूत्रम्— लुँङ्सनोर्घस्लृँ (२,४.३७)

अर्थः— अदो घस्लृँ स्याल्लुँङि सनि च।

लृदित्वादङ्। अघसत्। आत्स्यत्॥

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | आत्स्यत् | आत्स्यताम् | आत्स्यन् |
| मध्यमः | आत्स्यः | आत्स्यतम् | आत्स्यत |
| उत्तमः | आत्स्यम् | आत्स्याव | आत्स्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'हन्' धातोः लँट्-प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | हन्+ति = **हन्ति** | हन्+तस् = **हतः** | हन्+अन्ति<br>ह् घ् न्+अन्ति = **घ्नन्ति** |
| मध्यमः | हन्+सि = **हंसि** | हन्+थस् = **हथः** | हन्+थ = **हथ** |
| उत्तमः | हन्+मि = **हन्मि** | हन्+वस् = **हन्वः** | हन्+मस् = **हन्मः** |

हनँ हिंसागत्योः॥ २॥ हन्ति॥

❖ अनुनासिकान्तानां लोप-विधायकं विधिसूत्रम्—

**सूत्रम्**— अनुदात्तोपदेश-वनति-तनोत्यादी-नामनुनासिकलोपो झलि क्ङिति (६,४.३७)

**अर्थः**— अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे।

यमि-रमि-नमि-गमि-हनि-मन्यतयो—ऽनुदात्तोपदेशाः।

तनुँ क्षणुँ क्षिणुँ ऋणुँ तृणुँ घृणुँ वनुँ मनुँ— तनोत्यादयः।

हतः। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः। हन्मः।

हन्+झि/अन्ति
ह् न्+अन्ति (गमहन...)
घ् न्+अन्ति (हो हन्तेर्ञ्णिन्नेषु)
**घ्नन्ति**

❖ अनुस्वार-परसवर्णौ
❖ अनुदात्तोपदेश......
❖ अनुस्वारः

यम्१ रमि२ नमि३गमि४हनि५मन्य६

वन्१

तनुँ१क्षणुँ२क्षिणुँ३ऋणुँ४तृणुँ५घृणुँ६वनुँ७मनुँ८

अन्त्यस्य लोपः

झलादौ किति/ङिति

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'हन्' धातोः प्रक्रिया (लिँट्—लुँट्)

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | हन्+अ = जघान्+अ = **जघान** | जघन्+अतुस् जघ् न् +अतुस् **जघ्नतुः** | जघ् न् +उस् = **जघ्नुः** |
| मध्यमः | जघन्+इ थ = जघनिथ,जघन्थ | जघ् न् +अथुस् = **जघ्नथुः** | जघ् न् +अ = **जघ्न** |
| उत्तमः | जघान्+ अ = **जघान,जघन** | जघ् न् +इ व = **जघ्निव** | जघ् न् + इ म = **जघ्निम** |

हन्+सिप्/थ
जहन्+थ (अभ्यासाच्च)
जघन्+ इ थ
**जघनिथ, जघन्थ**

- ❖ गमहनेति— उपधालोपः,
  हो हन्तेर्ञ्णिन्नेषु— नकारे परे कुत्वम्
- ❖ हो हन्तेर्ञ्णिन्नेषु— णित्वप्रयुक्तं कुत्वम्
- ❖ अभ्यासाच्च— कुत्वम्, इड्-विकल्पः

जघान। जघ्नतुः। जघ्नुः॥

❖ कुत्व-विधायकं विधिसूत्रम्—

**सूत्रम्— अभ्यासाच्च (७,३.५५)**

**अर्थः—** अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ, जघन्थ। जघ्नथुः। जघ्न। जघ्निव। जघ्निम। हन्ता। हनिष्यति।

| | | | |
|---|---|---|---|
| प्रथमः | हन्ता | हन्तारौ | हन्तारः |
| मध्यमः | हन्तासि | हन्तास्थः | हन्तास्थः |
| उत्तमः | हन्तास्मि | हन्तास्वः | हन्तास्मः |

| | | | |
|---|---|---|---|
| प्रथमः | हनिष्यति | हनिष्यतः | हनिष्यन्ति |
| मध्यमः | हनिष्यसि | हनिष्यथः | हनिष्यथ |
| उत्तमः | हनिष्यामि | हनिष्यावः | हनिष्यामः |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘हन्’ धातोर्लोट्लकारस्य प्रक्रिया



➢ लोटि ‘हन्+ति’ अनुस्वार-परसवर्णे , ‘एरुः’ इति उत्वे— हन्तु
तातँङो ङित्वाद् ‘अनुदात्तोपदेश...’ इति सूत्रेणानुनासिकस्य नस्य लोपे— हतात्

| | | |
|---|---|---|
| हन्तु -हतात् | हताम् | घ्नन्तु |
| जहि-हतात् | हतम् | हत |
| हनानि | हनाव | हनाम |

हन्+सिप्
हन्+हि (सेर्ह्यपिच्च)
ज+हि (हन्तेर्जः)
जहि

✓ आभीयम्— असिद्धवदत्राभाद् इत्यारभ्य भाधिकारम् अभिव्याप्यकार्यम्।

✓ कृतम् आभीयम्— हन्तेर्जः (६,४.३६) (असिद्धं भवति)
✓ करिष्यमाणम् आभीयम्— (अतो हेः-६.४.१०५)

✓ समानाश्रयम्— उभयोर् आभीययोर् एकमेव निमित्तम्। यथा— ‘हन्तेर्जः’ इत्यस्य निमित्तम् – ‘हि’ इति,तत् ‘अतो हेः’ इत्यस्यापि निमित्तम्।

हन्तु, हतात्। हताम्। घ्नन्तु॥

❖ जादेश-विधायकं विधिसूत्रम्—

सूत्रम्— हन्तेर्जः (६,४.३६)
अर्थः— (स्यात्) हौ परे॥

❖ असिद्धत्वातिदेश-विधायकम् अधिकारसूत्रम्—

सूत्रम्— असिद्धवदत्राभात् (६,४.२२)
अर्थः— इत ऊर्ध्वमापादसमाप्तेराभीयम्, समानाश्रये= तुल्यनिमित्ते तस्मिन्= आभीये कर्तव्ये तत्= कृतम् आभीयम् असिद्धम् (स्यात्)। इति जस्यासिद्धत्वान्न हेर्लुक् (अतो हेः-६.४.१०५)। जहि, हतात्। हतम्। हत। हनानि। हनाव। हनाम।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘हन्’ धातोर्ङिल्लँकाराणां प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

हन्+ लँङ्/ति
अहन् अ+ त्
अहन् (हल्ङ्याभ्य..)

| | | | |
|---|---|---|---|
| प्रथमः | अहन् | अहताम् | अघ्नन् |
| मध्यमः | अहन् | अहतम् | अहत |
| उत्तमः | अहनम् | अहन्व | अहन्म |

❖ अनुदात्तोपदेश...— नकारलोपः

| | | | |
|---|---|---|---|
| प्रथमः | हन्यात् | हन्याताम् | हन्युः |
| मध्यमः | हन्याः | हन्यातम् | हन्यात |
| उत्तमः | हन्याम् | हन्याव | हन्याम |

हन्+
वध+
वध+लिँङ्/त्
वध+यास् त् (अतो लोपः)
वध्यात्

| | | | |
|---|---|---|---|
| प्रथमः | वध्यात् | वध्यास्ताम् | वध्यासुः |
| मध्यमः | वध्याः | वध्यास्तम् | वध्यास्त |
| उत्तमः | वध्यासम् | वध्यास्व | वध्यास्म |

अहन्। अहताम्। अघ्नन्। अहन्। अहतम्। अहत। अहनम्। अहन्व। अहन्म। हन्यात्। हन्याताम्। हन्युः॥

❖ ‘आर्धधातुकविषये’ अधिकारसूत्रम्—

सूत्रम्— आर्धधातुके (२,४.३५)

अर्थः— इत्यधिकृत्य॥ (ण्यक्षत्रियार्षञितो यूनि लुगणिञोः—२.४.५८)

❖ वध-आदेशविधायकं द्वयं विधिसूत्रम्—

सूत्रम्— हनो वध लिँङि (२,४.४१)

अर्थः— (हन्-धातोर् ‘वध’ स्याल्लिँङि।)

सूत्रम्— लुँङि च (२,४,४३)

अर्थः— (हन्-धातोर् ‘वध’ स्याल्लुँङि।)

वधादेशोऽदन्तः। आर्धधातुके इति विषयसप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वाद् ‘अतो लोपः’। वध्यात्। वध्यास्ताम्।

# परस्मैपदिधातुषु ‘हन्’ धातोर्ङिल्लँकाराणां प्रक्रिया



हन्+
वध+
वध + लुँङ्/ति
अवध + च्लिँ त्
अवध + स् त्
अवध + इट् स् ई त्
अवध + ई त् (अतो लोपः)
अवध् + ई त्
**अवधीत्**

(वध-) आदेशस्यानेकाच्त्वाद् ‘एकाच....’ इतीण्निषेधाभावादिट्। ‘अतो हलादेः...’ इति वृद्धौ प्राप्तायाम् –

❖ स्थानिवद्भाव-विधायकम् अतिदेशसूत्रम्—

**सूत्रम्— अचः परस्मिन् पूर्वविधौ (१,१.५७)**

अर्थः— परनिमित्तोऽजादेशः स्थानिवत् (स्यात्), स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये।

*पर को निमित्त मानकर हुआ अच् के स्थान पर आदेश स्थानिवत् हो, यदि उस स्थानिभूत अच् से (व्यवहित या अव्यवहित) पूर्व में देखे गये (वर्ण) के स्थान पर कार्य करना हो तो।*

इत्यल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। अवधीत्। अहनिष्यत्॥

# परस्मैपदिधातुषु 'यु' धातोः प्रक्रिया



| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | यु+ति = यौति | यु+तस् =युतः | यु+अन्ति = युवन्ति |
| मध्यमः | यु+सि = यौषि | यु+थस् = युथः | यु+थ = युथ |
| उत्तमः | यु+मि = यौमि | यु+वस् = युवः | यु+मस् = युमः |

| | | | | | |
|---|---|---|---|---|---|
| युयाव | युयुवतुः | युयुवुः | यविता | यवितारौ | यवितारः |
| युयविथ | युयुवथुः | युयुव | यवितासि | यवितास्थः | यवितास्थ |
| युयाव, युयव | युयुविव | युयुविम | यवितास्मि | यवितास्वः | यवितास्मः |

| | | | | | |
|---|---|---|---|---|---|
| यौतु, युतात् | युताम् | युवन्तु | अयौत् | अयुताम् | अयुवन् |
| युहि, युतात् | युतम् | युत | अयौः | अयुतम् | अयुत |
| यवानि | यवाव | यवाम | अयवम् | अयुव | अयुम |

❖ उतो वृद्धिर्लुकि हलि ❖ गुणावादेशौ

'यु' मिश्रणामिश्रणयोः ॥ ३ ॥

❖ वृद्धि-विधायकं विधिसूत्रम्—

**सूत्रम्**— उतो वृद्धिर्लुकि हलि (७,३.८९)

**अर्थः**— लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य। यौति। युतः। युवन्ति। यौषि। युथः। युथ। यौमि। युवः। युमः। युयाव। यविता। यविष्यति। यौतु, युतात्। अयौत्। अयुताम्। अयुवन्।

यत्र लुक्
तत्र उकारस्य
वृद्धिः

सार्वधातुके हलादौ
पिति

अभ्यस्तस्य तु न वृद्धि
(यङ्लुक्प्रक्रियायाम्)

# परस्मैपदिधातुषु ‘यु’ धातोः प्रक्रिया



| | | | | | |
|---|---|---|---|---|---|
| युयात् | युयाताम् | युयुः | यूयात् | यूयास्ताम् | यूयासुः |
| युयाः | युयातम् | युयात | यूयाः | यूयास्तम् | यूयास्त |
| युयाम् | युयाव | युयाम | यूयासम् | यूयास्व | यूयास्म |

आशीर्लिँङि- अकृतसार्वधातुकयोर्दीर्घः

युयात्। इह उतो वृद्धिर्न, भाष्ये – ‘पिच्च ङिन्न ङिच्च पिन्न’ इति व्याख्यानात्। युयाताम्। युयुः। यूयात्। यूयास्ताम्। यूयासुः। अयावीत्। अयविष्यत्॥

| | | |
|---|---|---|
| अयावीत् | अयाविष्टाम् | अयाविषुः |
| अयावीः | अयाविष्टम् | अयाविष्ट |
| अयाविषम् | अयाविष्व | अयाविष्म |

यु +लुँङ
यु + च्लिँ त्
यु +इ स् ई त् (सिचि वृद्धि....)
यौ +इ स् ई त्
यौ +ई त्
याव् +ई त्
अयाव् +ई त्
**अयावीत्**

ङित्
पित्
यु +यास् त्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'आदन्त'धातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

या + लिँट्/ति
या + णल्
या या + औ
(आत औ णलः)
य या + औ
**ययौ**

या + लिँट्/सि
या या + थल्
य या + इ थ
(आतो लोप इटि च)
य य् + इ थ
**ययिथ, ययाथ**

या + लँङ्/झि
या + जुस्
अ या + उस्
(उस्यपदान्तात्)
अयुस्
**अयुः**

या प्रापणे ॥ ४ ॥ याति। यातः। यान्ति। ययौ। याता। यास्यति। यातु। अयात्। अयाताम्॥

❖ वैकल्पिक-जुसादेशविधायकं विधिसूत्रम्—

**सूत्रम्**— **लँङः शाकटायनस्यैव(३,४.१११)**

**अर्थः**— आदन्तात्परस्य लँङो झेर्जुस् वा स्यात्।

अयुः, अयान्। यायात्। यायाताम्। यायुः। यायात्। यायास्ताम्। यायासुः। अयासीत्। अयास्यत्।

या + लँङ्/झि
या + अन्ति
या + अन्त्
अया + अन्
**अयान्**

या + लुँङ्/ति
या + च्लिँ ति
या + स् त्
अ या + स् ई त्
अ या स् + इ स् ई त्
(यम-रम-नम-आतां सक् च)

अ या स् + इ स् ई त्
अ या स् + इ ई त्
अ या स् + ई त्
**अयासीत्**

आ+ या = आगमने— आयाति
सम्+आ+ या = आगमने— समायाति
सम् + या = सम्यगवगमने— संयाति
अप्+ या = दूरीभवने— अपयाहि
प्र+ या = गमने— प्रयाति
उप+ या =समीप गमने— उपयान्ति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘या’धातोः रूपाणि

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

वा गतिगन्धनयोः॥ ५॥ भा दीप्तौ॥ ६॥ ष्णा शौचे॥ ७॥ श्रा पाके॥ ८॥ द्रा कुत्सायां गतौ॥ ९॥ प्सा भक्षणे॥ १०॥ रा दाने॥ ११॥ ला आदाने॥ १२॥ दाप् लवने॥ १३॥ पा रक्षणे॥ १४॥ ख्या प्रकथने॥ १५॥ अयं सार्वधातुके एव प्रयोक्तव्यः॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| लँट् | याति | यातः | यान्ति | यासि | याथः | याथ | यामि | यावः | यामः |
| लिँट् | ययौ | ययतुः | ययुः | ययिथ ययाथ | ययथुः | यय | ययौ | ययिव | ययिम |
| लुँट् | याता | यातारौ | यातारः | यातासि | यातास्थः | यातास्थ | यातास्मि | यातास्वः | यातास्मः |
| लृँट् | यास्यति | यास्यतः | यास्यन्ति | यास्यसि | यास्यथः | यास्यथ | यास्यामि | यास्यावः | यास्यामः |
| लोँट् | यातु-तात् | याताम् | यान्तु | याहि-तात् | यातम् | यात | यानि | याव | याम |
| लँङ् | अयात् | अयाताम् | अयुः,अयान् | अयाः | अयातम् | अयात | अयाम् | अयाव | अयाम |
| वि.लिँङ् | यायात् | यायाताम् | यायुः | यायाः | यायातम् | यायात | यायाम् | यायाव | यायाम |
| आ.लिँङ् | यायात् | यायास्ताम् | यायासुः | यायाः | यायास्तम् | यायास्त | यायासम् | यायास्व | यायास्म |
| लुँङ् | अयासीत् | अयासिष्टाम् | अयासिषुः | अयासीः | अयासिष्टम् | अयासिष्ट | अयासिषम् | अयासिष्व | अयासिष्म |
| लृँङ् | अयास्यत् | अयास्यताम् | अयास्यन् | अयास्यः | अयास्यतम् | अयास्यत | अयास्यम् | अयास्याव | अयास्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'विद्' धातोः प्रक्रिया



## लँट्-लकारस्य रूपाणि

| | | |
|---|---|---|
| वेद<br>वेत्ति | विदतुः<br>वित्तः | विदुः<br>विदन्ति |
| वेत्थ<br>वेत्सि | विदथुः<br>वित्थः | विद<br>वित्थ |
| वेद<br>वेद्मि | विद्व<br>विद्वः | विद्म<br>विद्मः |

## लिँटि 'आम्'अभावे रूपाणि

| | | |
|---|---|---|
| विवेद | विविदतुः | विविदुः |
| विवेदिथ | विविदथुः | विविद |
| विवेद | विविदिव | विविदिम |

विदाञ्चकार, विदांचकार
विदाम्बभूव, विदामास

## लिँटि 'आम्' पक्षे रूपाणि

| | | |
|---|---|---|
| विदाञ्चकार | विदाञ्चक्रतुः | विदाञ्चक्रुः |
| विदाञ्चकर्थ | विदाञ्चक्रथुः | विदाञ्चक्र |
| विदाञ्चकार<br>विदाञ्चकर | विदाञ्चकृव | विदाञ्चकृम |

विदँ ज्ञाने ॥ १६ ॥

❖ णलाद्यादेशविधायकं विधिसूत्रम्—

सूत्रम्— विदो लँटो वा (३,४.८३)

अर्थः— वेत्तेर्लँटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे – वेत्ति। वित्तः। विदन्ति ॥

❖ आम्-विधायकं विधिसूत्रम्—

सूत्रम्— उष-विद-जागृभ्योऽन्यतरस्याम् (३,१.३८)

अर्थः— एभ्यो लिँटि आम्वा स्यात्। ('आम्'सन्निधाने) विदेरन्तत्वप्रतिज्ञानादामि न गुणः। विदाञ्चकार, विवेद।

विद् + लँट्/ति
वेद् + अ (लघूपधो गुणः)
**वेद**

# परस्मैपदिधातुषु ‘विद्’ धातोः प्रक्रिया



विद् + लोँट्
विद् आम् + लोँट्
विद् आम् +
विदाम् + कृ लोँट्
विदाम् + कृ ति

विदाम् + कृ उ ति
विदाम् + कर् ओ ति
विदां + करो तु
**विदाङ्करोतु**
**विदांकरोतु**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | विदाङ्करोतु<br>विदाङ्कुरुतात् | विदाङ्कुरुताम् | विदाङ्कुर्वन्तु |
| मध्यमः | विदाङ्कुरु<br>विदाङ्कुरुतात् | विदाङ्कुरुतम् | विदाङ्कुरुत |
| उत्तमः | विदाङ्करवाणि | विदाङ्करवाव | विदाङ्करवाम |

वेदिता। वेदिष्यति॥

सिद्धप्रक्रियस्य (पदस्य) सूत्रे निर्देशनं निपातनम्।

❖ निपातनार्थं विधिसूत्रम्—

**सूत्रम्— विदाङ्कुर्वन्त्वित्यन्यतरस्याम् (३,१.४१)**

**अर्थः—** १.वेत्तेर्लोँटि आम् २.गुणाभावो ३. लोँटो लुक् ४.लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। पुरुषवचने न विवक्षिते।

❖ उ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तनादिकृञ्भ्य उः (३,१.७९)**

**अर्थः—** तनादेः कृञश्च उः प्रत्ययः स्यात्। शपोऽपवादः। गुणौ। विदाङ्करोतु॥

उदादेश-विधायकं विधिसूत्रम्—

**सूत्रम्— अत उत्सार्वधातुके (६,४.११०)**

**अर्थः—** उत्प्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु। विदाङ्करवाणि।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'विद्' धातोः प्रक्रिया



## लँङ्-लकारस्य रूपाणि

| | | |
|---|---|---|
| अवेत्-द् | अवित्ताम् | अविदुः |
| अवेः<br>अवेत्-द् | अवित्तम् | अवित्त |
| अवेदम् | अविद्व | अविद्म |

विद् + लँङ्
अवेद् + स्
अवेद् +
अवेर् +
अवेः, अवेत्-द्

अवेत्। अवित्ताम्। अविदुः॥

❖ रुँत्व-विधायकं विधिसूत्रम्—

**सूत्रम्— दश्च (८,२.७५)**

अर्थः— धातोर्दस्य पदान्तस्य सिपि रुँर्वा।

अवेः, अवेत्। विद्यात्। विद्याताम्। विद्युः। विद्यात्। विद्यास्ताम्। अवेदीत्। अवेदिष्यत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'अस्' धातोः प्रक्रिया (लँट्)



| | | |
|---|---|---|
| अस्+ति= अस्ति | अस्+तस्= स्तः | अस्+अन्ति= सन्ति |
| अस्+सि= असि | अस्+थस्=स्थः | अस्+थ=स्थ |
| अस्+मि= अस्मि | अस्+वस्=स्वः | अस्+मस्=स्मः |

- सार्वधातुके किति ङिति— अस्-धातोर् अकारलोपः।
- सिपि— 'तासस्त्योर्लोपः' इत्यनेन अस्-धातोर् सकारलोपः।

१. श्नम्-प्रत्ययस्य— अकाररस्य
२. अस्-धातोः—अकारस्य

लोपः

सार्वधातुके— किति / ङिति

असँ भुवि ॥ १७ ॥ अस्ति ॥

- अल्लोप-विधायकं विधिसूत्रम्—

सूत्रम्— श्नसोरल्लोपः (६,४.१११)

अर्थः— श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति। स्तः। सन्ति। असि। स्थः। स्थ। अस्मि। स्वः। स्मः।

- षत्व-विधायकं विधिसूत्रम्—

सूत्रम्— उपसर्गप्रादुर्भ्यामस्तिर्यच्परः (८,३.८७)

अर्थः— उपसर्गेणः[१] प्रादुस[२]श्चास्तेः सस्य षो यकारेऽचि च परे। निष्यात्, (निष्ष्यात्,प्रादुष्ष्यात्। निष्षन्ति ।) प्रनिषन्ति, प्रादुः षन्ति। प्रादुष्षन्ति। यच्परः किम् ?। अभिस्तः॥

| नि + स्यात्<br>निष्यात् | प्र + नि + सन्ति<br>प्रनिषन्ति | प्रादुस्+ सन्ति<br>प्रादुः षन्ति | अभि+ स्तः<br>अभिस्तः |
|---|---|---|---|

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'अस्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| | | | | | |
|---|---|---|---|---|---|
| अस्तु ,स्तात् | स्ताम् | सन्तु | आसीत् | आस्ताम् | आसन् |
| एधि,स्तात् | स्तम् | स्त | आसीः | आस्तम् | आस्त |
| असानि | असाव | असाम | आसम् | आस्व | आस्म |

तातङि— ङित्वात् 'श्नसोरल्लोप' इत्यनेन अस्-धातोर्- अकारलोपः।

अस् + लोँट्/सिप्
अ ए + सि (घ्वसोरेद्धावभ्यासलोपश्च)
अ ए + धि (हु-झल्भ्यो हेर्धिः)
ए + धि (श्नसोरल्लोपः)
**एधि**

अस् + लँङ्/ति
अस् शप् + त्
आ अस् + ई त्
**आसीत्**

❖ 'भू'आदेश-विधायकं विधिसूत्रम्—

**सूत्रम्— अस्तेर्भूः (२,४.५२)**

**अर्थः—** आर्धधातुके। बभूव। भविता। भविष्यति। अस्तु, स्तात्। स्ताम्। सन्तु॥

❖ एत्वाभ्यासलोप-विधायकं विधिसूत्रम्—

**सूत्रम्— घ्वसोरेद्धावभ्यासलोपश्च (६,४.११९)**

**अर्थः—** घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च। एत्वस्यासिद्धत्वाद्धेर्धिः। श्नसोरित्यल्लोपः। तातङ्पक्षे एत्वं न, परेण तातङा बाधात्। एधि, स्तात्। स्तम्। स्त। असानि। असाव। असाम। ईट्, आसीत्। आस्ताम्। आसन्। स्यात्। स्याताम्। स्युः। भूयात्। अभूत्। अभविष्यत्॥

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'इ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

## लँट्-लकारस्य रूपाणि

| | | |
|---|---|---|
| इ+ ति = एति | इ+ तस् = इतः | इ+ अन्ति = यन्ति |
| इ+ सि = एषि | इ+ थस् = इथः | इ+ थ= इथ |
| इ+ मि = एमि | इ+ वस् = इवः | इ+ मस् = इमः |

## लिँट्-लकारस्य रूपाणि

| | | |
|---|---|---|
| इयाय | ईयतुः | ईयुः |
| इययिथ, इयेथ | ईयथुः | ईय |
| इयाय, इयय | ईयिव | ईयिम |

इ इ + अतुस्
ई इ + अतुस्
ई य् + अतुस् (इणो यण्)
**ईयतुः**

इ + लिँट्/ति/णल्
इ इ + अ
इ ऐ + अ
इय् ऐ + अ
**इयाय**

इण् गतौ ॥ १८ ॥ एति । इतः ॥

❖ यण्-विधायकं विधिसूत्रम्—

**सूत्रम्— इणो यण् (६,४.८१)**

**अर्थः**— अजादौ प्रत्यये परे । यन्ति ॥

❖ इयङ्-उवङादेशविधायकं विधिसूत्रम्—

**सूत्रम्— अभ्यासस्यासवर्णे (६,४.७८)**

**अर्थः**— अभ्यासस्य इवर्णोवर्णयोरियँङुवँङौ स्तोऽसवर्णेऽचि । इयाय ॥

❖ दीर्घ-विधायकं विधिसूत्रम्—

**सूत्रम्— दीर्घ इणः किति (७,४.६९)**

**अर्थः**—इणोऽभ्यासस्य दीर्घः स्यात् किति लिँटि । ईयतुः । ईयुः । इययिथ, इयेथ ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'इ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

## लोँट्-लकारस्य रूपाणि

| | | |
|---|---|---|
| एतु- इतात् | इताम् | यन्तु |
| इहि- इतात् | इतम् | इत |
| अयानि | अयाव | अयाम |

इ + मि
इ + आ नि
ए + आ नि
**अयानि**

## लँङ्-लकारस्य रूपाणि

| | | |
|---|---|---|
| ऐत् | ऐताम् | आयन्* |
| ऐः | ऐतम् | ऐत |
| आयम्* | ऐव | ऐम |

इ + त्
ए + त्
आ ए + त्
**ऐत्** (वृद्धिः)

(इणो यण्)
इ + अन्ति
य् + अन्
आ य् + अन्
**आयन्**

| | | |
|---|---|---|
| अगात् | अगाताम् | अगुः |
| अगाः | अगातम् | अगात |
| अगाम | अगाव | अगाम |

अभि+ ईयात्
**अभीयात्**

सम्+ आ+ ईयात्
**समेयात्**

एता। एष्यति। एतु-इतात्। इहि। ऐत्। ऐताम्। आयन्। इयात्। ईयात्॥

ह्रस्व-विधायकं विधिसूत्रम्—

**सूत्रम्—** एतेर्लिँङि (७,४.२४)

**अर्थः—** उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिँङि। निरियात्।

**परिभाषा—** उभयत= पूर्वान्तत्वेन परादित्वेन च युगपद् आश्रयणे (कर्त्तव्ये) नान्तादिवत्= 'अन्तादिवच्चे'ति सूत्रं न प्रवर्त्तते।

**भावार्थः—** पूर्व-परशब्दाभ्याम् अन्तादिशब्दाभ्याञ्च विरोधस्य पुरःस्फूर्त्तिकतया विरुद्धातिदेशद्वयस्य युगपद् असम्भवादिति भावः।

अभीयात्। अणः किम्? समेयात्॥

गा-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्—** इणो गा लुँङि (२,४.४५)

**अर्थः—** 'गातिस्थे'ति सिँचो लुक्। अगात्। ऐष्यत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'शी' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| लँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | शी+ ते= शेते | शी+ आते<br>शे+ आते= शयाते | शी+ झ<br>शे+ र् अते= शेरते |
| मध्यमः | शे+ से= शेषे | शे+ आथे= शयाथे | शे+ ध्वे= शेध्वे |
| उत्तमः | शे+ इ= शये | शे+ वहे= शेवहे | शे+ महे= शेमहे |

**ध्यातव्यम्—** 'सार्वधातुकमपित्' इति सूत्रेण सार्वधातुकात्मनेपदप्रत्ययानां 'सार्वधातुकार्धधातुकयोः' इत्ययनेन प्राप्तं गुणं ङित्वात् यद्यपि 'क्क्ङिति च' इति सूत्रेण बाध्यते तथापि 'शीङः सार्वधातुके गुणः' इति सूत्रारम्भसामर्थ्याद् गुणः।

| लिँट् | | | |
|---|---|---|---|
| प्रथमः | शिशी + ए= शिश्ये | शिशी+ आते= शिश्याते | शिशी+ इरे= शिश्यिरे |
| मध्यमः | शिशी+ इ से= शिश्यिषे | शिशी+ आथे= शिश्याथे | शिशी+इध्वे= शिश्यिध्वे |
| उत्तमः | शिशी+ इ= शिश्ये | शिशी+इवहे=शिश्यिवहे | शिशी+ इमहे= शिश्यिमहे |

शीङ् स्वप्ने ॥ १९ ॥

❖ गुण-विधायकं विधिसूत्रम्—

**सूत्रम्—** शीङः सार्वधातुके गुणः (७,४.२१)

**अर्थः—** 'क्क्ङिति च'त्यस्यापवादः[१]। शेते। शयाते॥

❖ रुँडागमविधायकं विधिसूत्रम्—

**सूत्रम्—** शीङो रुँट् (७,१.६)

**अर्थः—** शीङः परस्य झादेशस्यातो रुँडागमः स्यात्। शेरते। शेषे। शयाथे। शेध्वे। शये। शेवहे। शेमहे। शिश्ये। शिश्याते। शिश्यिरे। शयिता। शयिष्यते। शेताम्। शयाताम्। अशेत। अशयाताम्। अशेरत। शयीत। शयीयाताम्। शयीरन्। शयिषीष्ट। अशयिष्ट। अशयिष्यत॥

शी शी + ए (इको यणचि) प्राप्ते
शि शी + ए (अचिश्नु......) प्राप्ते
शिश्ये (एरनेकाच........यण्)

१. अयं पाठः चेन्नै संस्करणे नास्ति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु ‘इ’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

| लँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अधि+इ+ ते= अधी+ ते= अधीते | अधि+इ+ आते अधि+इय्+ आते= अधीयाते (इयङ्-दीर्घौ) | अधि+इ+ झ अधि+इय्+ अते= अधीयते |
| मध्यमः | अधीषे | अधीयाथे | अधीध्वे |
| उत्तमः | अधीये | अधीवहे | अधीमहे |

इ+ लिँट्/त/एश्
गा+ ए
गा गा+ ए
ग गा+ ए
अधि+जगा+ ए
अधिजगे
(आतो लोप इटि च)

इ+ लोँट्/इ
इ+ ऐ
इ+ आ ऐ
इ+ ऐ
ए+ ऐ= अयै
अधि+ अयै
अध्ययै

इ+ लँङ्/त
आ इ+ त
ऐ+ त
अधि ऐ+ त
अध्यैत

इङ् अध्ययने॥ २०॥ इङिकावध्युपसर्गतो न व्यभिचरतः= परित्यजतः। अधीते। अधीयाते। अधीयते॥

❖ गा-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— गाङ् लिँटि (२,४.४९)

अर्थः— इङो गाङ् स्याल्लिँटि।

अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अधीताम्। अधीयाताम्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै। अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्। अध्यैयत। अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्। अध्यैयि। अध्यैवहि। अध्यैमहि। अधीयीत। अधीयीयाताम्। अधीयीरन्। अध्येषीष्ट॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'इ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

इ+ वि.लिँङ्/त
इ+ सीय् त
इ+ ई त
इय्+ ई त= इयीत
अधि+ इयीत
अधीयीत

इ+ आ.लिँङ्/त
इ+ सीय् स् त
ए+ सी स् त (गुणः)
एषीष्ट(षत्वम्, ष्टुत्वम्)
अधि+ एषीष्ट
अध्येषीष्ट

इ+ लुँङ्/त
गा च्लिँ+ त
गा स्+ त
गी स्+ त
अगी स्+ त = अगीष्ट
अधि+अगीष्ट= अध्यगीष्ट

❖ वैकल्पिक-गा-आदेशविधायकं विधिसूत्रम्—
सूत्रम्— विभाषा लुँङ्-लृँङोः (२,४.५०)
अर्थः— इङो गाङ् वा स्यात्[१]॥
❖ ङित्-विधायकम् अतिदेशसूत्रम्—
सूत्रम्— गाङ्कुटादिभ्योऽञ्णिन्ङित् (१,२.१)
अर्थः— गाङादेशात् कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः॥
❖ ईत्-विधायकं विधिसूत्रम्—
सूत्रम्— घु-मा-स्था-गा-पा-जहाति-सां हलि।
अर्थः— एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके। अध्यगीष्ट, अध्यैष्ट। अध्यगीष्यत, अध्यैष्यत॥

| | | | |
|---|---|---|---|
| प्रथमः लुँङ् | अध्यगीष्+त = अध्यगीष्ट अध्यैष्ट | अध्यगीष्+आताम् = अध्यगीषाताम् अध्यैषाताम् | अध्यगीष्+अत = अध्यगीषत अध्यैषत |
| मध्यमः | अध्यगीष्ठाः अध्यैष्ठाः | अध्यगीषाथाम् अध्यैषाथाम् | अध्यगीढ्वम् अध्यैढ्वम् |
| उत्तमः | अध्यगीषि अध्यैषि | अध्यगीष्वहि अध्यैष्वहि | अध्यगीष्महि अध्यैष्महि |

आ इ स्+ त
आ ए स्+ त
अधि+ऐष्ट= अध्यैष्ट

१. चेन्नै संस्करणे 'इण्' इत्येव पाठः।

संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘दुह्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

प्रपूरणम् = प्रपूरणाभावः

दुहँ प्रपूरणे ॥ २१ ॥ दोग्धि, दुग्धः, दुहन्ति । धोक्षि । दुग्धे, दुहाते, दुहते । धुक्षे, दुहाथे, धुग्ध्वे । दुहे, दुह्वहे, दुह्महे । दुदोह, दुदुहे । दोग्धासि, दोग्धासे । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत ॥

- लँटि ‘दुह्+ति’ शब्लुकि लघूपधगुणे कृते ‘दोह्+ति’ ढत्वं प्रबाध्य ‘दादेर्धातोर्घः’ इति सूत्रेण घत्वे ‘दोघ् + ति’ इति जाते ‘झषस्तथोर्धोऽधः’ इति सूत्रेण प्रत्ययतकारस्य धत्वे ‘दोघ् + धि’ इति जाते ‘झलां जश् झशि’ इत्यनेन जश्त्वे (घकारस्य स्थाने गकारे) कृते ‘दोग् + धि’ = दोग्धि

- लँटि ‘दुह्+सि’ गुणे घत्वे च कृते ‘दोघ् + सि’ इति जाते ‘एकाचो बशो भष्-झषन्तस्य स्ध्वोः’ इति सूत्रेण धातोः दकारस्य भष्भावे धकारे कृते ‘धोघ् + सि’ इति स्थिते ‘आदेशप्रत्यययोः’ इत्यनेन षत्वे ‘धोघ् + षि’ इति स्थिते ‘खरि च’ इत्यनेन घकारस्य चर्त्वे ककारे ‘धोक् + षि’ = धोक्षि

घ-ध-क-षाः

### लँट्-लकारः

| | | |
|---|---|---|
| दोग्धि<br>दुग्धे | दुग्धः<br>दुहाते | दुहन्ति<br>दुहते |
| धोक्षि<br>धुक्षे | दुग्धः<br>दुहाथे | दुग्ध<br>धुग्ध्वे |
| दोह्मि<br>दुहे | दुह्वः<br>दुह्वहे | दुह्मः<br>दुह्महे |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'दुह्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

## लोट्-लकारः

| | | |
|---|---|---|
| दोग्धु, दुग्धात् दुग्धाम् | दुग्धाम् दुहाताम् | दुहन्तु दुहताम् |
| दुग्धि, दुग्धात् धुक्ष्व | दुग्धम् दुहाथाम् | दुग्ध धुग्ध्वम् |
| दोहानि दोहै | दोहाव दोहावहै | दोहाम दोहामहै |

अदुह्+ लँङ्/तिप्
अदुह् शप्+ त्
अदोह्+ त् (गुणः)
अदोह् (हल्ङ्या..)
अदोघ् (घत्वम्)
अधोघ् (धत्वम्)
अधोग् (जश्त्वम्)
अधोक् (वै.चर्त्वम्)
१.अधोक्
२.अधोग्

## लँङ्-लकारः

| | | |
|---|---|---|
| अधोक्-ग् अदुग्ध | अदुग्धाम् अदुहाताम् | अदुहन् अदुहत |
| अधोक्-ग् अदुग्धाः | अदुग्धम् अदुहाथाम् | अदुग्ध अधुग्ध्वम् |
| अदोहम् अदुहि | अदुह्व अदुह्वहि | अदुह्म अदुह्महि |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'दुह्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

## विधिलिँङ्-लकारः

| | | |
|---|---|---|
| दुह्यात्<br>दुहीत | दुह्याताम्<br>दुहीयाताम् | दुह्युः<br>दुहीरन् |
| दुह्याः<br>दुहीथाः | दुह्यातम्<br>दुहीयाथाम् | दुह्यात<br>दुहीध्वम् |
| दुह्याम्<br>दुहीय | दुह्याव<br>दुहीवहि | दुह्याम<br>दुहीमहि |

## आशीर्लिँङ्-लकारः

| | | |
|---|---|---|
| दुह्यात्<br>धुक्षीष्ट | दुह्यास्ताम्<br>धुक्षीयास्ताम् | दुह्यासुः<br>धुक्षीरन् |
| दुह्याः<br>धुक्षीष्ठाः | दुह्यास्तम्<br>धुक्षीयास्थाम् | दुह्यास्त<br>धुक्षीध्वम् |
| दुह्यासम्<br>धुक्षीय | दुह्यास्व<br>धुक्षीवहि | दुह्यास्म<br>धुक्षीमहि |

दुह्+ सीय् स् त
दुघ्+सीस्त (घत्वम्)
धुघ्+सीस्त (धत्वम्)
धुघ्+षीष्ट (षत्वम्)
धुक्+षीष्ट (चर्त्वम्)
धुक्षीष्ट

❖ कित्-विधायकम् अतिदेशसूत्रम्—

सूत्रम्— लिँङ्-सिँचावात्मनेपदेषु (१,२.११)

अर्थः— इक्समीपाद्धलः परौ झलादी लिँङ्-सिँचौ कितौ स्तस्तङि। धुक्षीष्ट॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'दुह्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| | | |
|---|---|---|
| अधुक्षत्<br>अदुग्ध, अधुक्षत | अधुक्षताम्<br>अधुक्षाताम् | अधुक्षन्<br>अधुक्षन्त |
| अधुक्षः<br>अदुग्धाः,अधुक्षथाः | अधुक्षतम्<br>अधुक्षाथाम् | अधुक्षत<br>अधुग्ध्वम्,अधुक्षध्वम् |
| अधुक्षम्<br>अधुक्षि | अधुक्षाव<br>अदुह्वहि,<br>अधुक्षावहि | अधुक्षाम<br>अधुक्षामहि |

दुह्+ च्लिँ त्
दुह्+ क्स त्
दुह्+ स त्
दुघ्+ स त् (घत्वम्)
धुघ्+ स त् (धत्वम्)

धुघ्+ ष त् (षत्वम्)
धुक्+ ष त् (चर्त्वम्)
धुक्षत्
अधुक्षत्

दुह्+ क्स त
दुघ्+ त (घ-ध-गाः)
अदुघ्+ ध
अदुग्ध

❖ क्स-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— शल इगुपधादनिटः क्सः (३,१.४५)

अर्थः— इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अधुक्षत्॥

❖ वैकल्पिक-क्सस्य लुक्-विधायकम् विधिसूत्रम्—

सूत्रम्— लुग्वा दुह-दिह-लिह-गुहामात्मनेपदे दन्त्ये॥

अर्थः— एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। अदुग्ध, अधुक्षत॥

अदुह्+ क्स आताम्

❖ नित्येन क्सस्य-अकारलोपविधायकं विधिसूत्रम्—

सूत्रम्— क्सस्याचि॥ (७,३.७२)

अदुह्+ स् आताम्

अर्थः— अजादौ तङि क्सस्य लोपः। अधुक्षाताम्। अधुक्षन्त। अदुग्धाः, अधुक्षथाः। अधुक्षाथाम्। अधुग्ध्वम्, अधुक्षध्वम्। अधुक्षि। अदुह्वहि, अधुक्षावहि। अधुक्षामहि। अधोक्ष्यत॥एवं दिहँ उपचये॥ २२॥ प्रणिदेग्धि।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'लिह्'धातोः रूपाणि

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

लिहँ आस्वादने॥ २३॥ लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लिलेह, लिलिहे। लेढासि, लेढासे। लेक्ष्यति, लेक्ष्यते। लेढु। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्, अलेड्। अलिक्षत्, अलीढ, अलिक्षत। अलेक्ष्यत्, अलेक्ष्यत॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| लँट् | लेढि<br>लीढे | लीढः<br>लिहाते | लिहन्ति<br>लिहते | लेक्षि<br>लिक्षे | लीढः<br>लिहाथे | लीढ<br>लीढ्वे | लेह्मि<br>लिहे | लिह्वः<br>लिह्वहे | लिह्मः<br>लिह्महे |
| लिँट् | लिलेह<br>लिलिहे | लिलिहतुः<br>लिलिहाथे | लिलिहुः<br>लिलिहिरे | लिलेहिथ<br>लिलिहिषे | लिलिहथुः<br>लिलिहाथे | लिलिह<br>लिलिहिढ्वे-ध्वे | लिलेह<br>लिलिहे | लिलिहिव<br>लिलिहिवहे | लिलिहिम<br>लिलिहिमहे |
| लुँट् | लेढा<br>लेढा | लेढारौ<br>लेढारौ | लेढारः<br>लेढारः | लेढासि<br>लेढासे | लेढास्थः<br>लेढासाथे | लेढास्थ<br>लेढाध्वे | लेढास्मि<br>लेढाहे | लेढास्वः<br>लेढास्वहे | लेढास्मः<br>लेढास्महे |
| लृँट् | लेक्ष्यति<br>लेक्ष्यते | लेक्ष्यतः<br>लेक्ष्येते | लेक्ष्यन्ति<br>लेक्ष्यन्ते | लेक्ष्यसि<br>लेक्ष्यसे | लेक्ष्यथः<br>लेक्ष्येथे | लेक्ष्यथ<br>लेक्ष्यध्वे | लेक्ष्यामि<br>लेक्ष्ये | लेक्ष्यावः<br>लेक्ष्यावहे | लेक्ष्यामः<br>लेक्ष्यमहे |
| लोँट् | लेढु - लीढात्<br>लीढाम् | लीढाम्<br>लिहाताम् | लिहन्तु<br>लिहताम् | लीढि- लीढात्<br>लिक्ष्व | लीढम्<br>लिहाथाम् | लीढ<br>लीढ्वम् | लेहानि<br>लेहै | लेहाव<br>लेहावहै | लेहाम<br>लेहामहै |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘लिह्’धातोः रूपाणि

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते अदादयः)

लिह्+ लँट्/तिप्
लेह्+ ति (गुणः)
लेढ्+ ति (ढत्वम्)
लेढ्+ धि (धत्वम्)
लेढ्+ ढि (ष्टुत्वम्)
ले+ ढि (ढलोपः)
लेढि



लिह्+ तस् (ङित्वाद्गुणाभावः)
लिढ्+ तस् (ढत्वम्)
लिढ्+ धस् (धत्वम्)
लिढ्+ ढस् (ष्टुत्वम्)
लि+ ढस् (ढलोपः)
ली+ ढस् (ढ्रलोपे पूर्वस्य दीर्घोऽणः)
लीढः (सस्य रुँत्वविसर्गौ)

❖ सकारे परे ‘षढो कः सि’ इति सूत्रं सर्वदा स्मरणीयम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘ब्रू’धातोः प्रक्रिया (लँट्)



| लँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | आह<br>ब्रवीति<br>ब्रूते | आहतुः<br>ब्रूतः<br>ब्रुवाते | आहुः<br>ब्रुवन्ति<br>ब्रुवते |
| मध्यमः | आत्थ<br>ब्रवीषि<br>ब्रूषे | आहथुः<br>ब्रूथः<br>ब्रुवाथे | ब्रूथ<br>ब्रूध्वे |
| उत्तमः | ब्रवीमि<br>ब्रुवे | ब्रूवः<br>ब्रूवहे | ब्रूमः<br>ब्रूमहे |

ब्रू + लँट्/ति
आह् + अ (णल्)
आह

ब्रू + लँट्/ति
ब्रो + ई ति
ब्र् अव् + ई ति
ब्रवीति

ब्रू + सि/थ
आह् + थ
आथ् + थ (चर्त्वम्)
आत्थ

**ब्रूञ् व्यक्तायां वाचि॥ २४॥**

❖ आह्-आदेशविधायकं णलादिविधायकञ्च विधिसूत्रम्—

सूत्रम्— ब्रुवः पञ्चानामादित आहो ब्रुवः (३,४.८४)

अर्थः— ब्रुवो लँटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। आह। आहतुः। आहुः॥

❖ थकारादेश-विधायकम् विधिसूत्रम्—

सूत्रम्— आहस्थः (८,२.३५)

अर्थः— (आहो हस्य थः स्यात्) झलि परे। चर्त्वम्। आत्थ। आहथुः॥

❖ ईडागमविधायकं विधिसूत्रम्—

सूत्रम्— ब्रुव ईट् (७,३.९३)

अर्थः— ब्रुवः परस्य हलादेः पित (सार्वधातुकस्य) ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते॥

(चेन्नै संस्करणे— ‘ब्रूषे। ब्रुवे,ब्रूवहे’ इत्यधिकः पाठः।)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'ब्रू'धातोः प्रक्रिया (लिँट्-लुँङ्)

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

ब्रू+ लिँट्/तिप्/णल्
वच् + अ
वच् वच् + अ
उ वच् + अ (लिँट्यभ्या..)
उवाच

ब्रू+ लिँट्/तस्/अतुस्
वच् + अतुस्
उच् + अतुस्
उच् उच् + अतुस्
ऊचतुः

ब्रू+ लुँङ्/तिप्
वच् च्लिँ + त्
वच् अङ् + त्
व उम् च् अ + त्
वोचत्
अवोचत्

ब्रू+ लिँट्/सिप्/थल्
वच् + थ
उ वच्+इथ= उवचिथ
उ वच्+थ (चोः कुः)
उवक्थ

❖ वच्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्**— ब्रुवो वचिः (२,४.५३)

**अर्थः**— आर्धधातुके। उवाच। ऊचतुः। ऊचुः। उवचिथ, उवक्थ। ऊचिव। ऊचे। वक्तासि, वक्तासे। वक्ष्यति, वक्ष्यते। ब्रवीतु, ब्रूतात्। ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्। ब्रवै। अब्रवीत्, अब्रूत। ब्रूयात्, ब्रुवीत। उच्यात्, वक्षीष्ट॥

❖ च्लेः-अङ्-आदेश-विधायकम् विधिसूत्रम्—

**सूत्रम्**— अस्यतिवक्तिख्यातिभ्योऽङ् (३,१.५२)

**अर्थः**—एभ्यश्च्लेरङ् स्यात् (कर्तरि)॥

❖ उम्-आगमविधायकं विधिसूत्रम्—

**सूत्रम्**— वच उम् (७,४.२०)

**अर्थः**— अङि परे। अवोचत्, अवोचत। अवक्ष्यत्, अवक्ष्यत।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘ऊर्णु’धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| लँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ऊर्णौति<br>ऊर्णोति<br>ऊर्णुते | ऊर्णुतः<br>ऊर्णुवाते | ऊर्णुवन्ति<br>ऊर्णुवते |
| मध्यमः | ऊर्णौषि<br>ऊर्णोषि<br>ऊर्णुषे | ऊर्णुथः<br>ऊर्णुवाथे | ऊर्णुथ<br>ऊर्णुध्वे |
| उत्तमः | ऊर्णौमि<br>ऊर्णोमि<br>ऊर्णुवे | ऊर्णुवः<br>ऊर्णुवहे | ऊर्णुमः<br>ऊर्णुमहे |

ऊर्णु + लँट्/ति
ऊर्णौ + ति
ऊर्णौति

ऊर्णु + लँट्/ति
ऊर्णो + ति
ऊर्णोति

**गणसूत्रम्—** चर्करीतञ्च।

**अर्थः—** ‘चर्करीतमि’ति यङ्लुगन्तस्य सञ्ज्ञा, तददादौ बोध्यम्॥

(लघुसिद्धान्तकौमुदीकारेण अत्र कस्मिन् सन्दर्भे **‘चर्करीतञ्च’** इति गणसूत्रं पठितमिति स्पष्टतया न ज्ञायते। अस्माकं मते तु अस्य गणसूत्रस्य पाठः अदादिषु परस्मैपदिधातूनामन्ते **‘इण् गतौ’** धातोः परं स्यात्।)

**ऊर्णुञ् आच्छादने॥ २५॥**

❖ वा-वृद्धिविधायकं विधिसूत्रम्—

**सूत्रम्—** ऊर्णोतेर्विभाषा (७,३.९०)

**अर्थः—** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते।

ऊर्णु

वा वृद्धिः

हलादौ पिति सार्वधातुके

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'ऊर्णु'धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| लिँट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ऊर्णुनाव<br>ऊर्णुनुवे | ऊर्णुनुवतुः<br>ऊर्णुनुवाते | ऊर्णुनुवुः<br>ऊर्णुनुविरे |
| मध्यमः | ऊर्णुनुविथ<br>ऊर्णुनविथ<br>ऊर्णुनुविषे | ऊर्णुनुवथुः<br>ऊर्णुनुवाथे | ऊर्णुनुव<br>ऊर्णुनुविढ्वे<br>ऊर्णुनुविध्वे |
| उत्तमः | ऊर्णुनाव<br>ऊर्णुनव<br>ऊर्णुनुवे | ऊर्णुनुविव<br>ऊर्णुनुविवहे | ऊर्णुनुविम<br>ऊर्णुनुविमहे |

ऊर्णु + अ (णल्)
ऊर् नु नु + अ
ऊर् नु नौ + अ
ऊर्णुनाव

वार्त्तिकम्— ऊर्णोतेराम्नेति वाच्यम्।
अर्थः—ऊर्णुञ् धातोर् 'आम्' न भवति।

❖ द्वित्वनिषेधकं सूत्रम्—

सूत्रम्— न न्द्राः संयोगादयः (६,१.३)
अर्थः— अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः॥

❖ वैकल्पिकङिद्भावविधायकं अतिसूत्रम्—

सूत्रम्— विभाषोर्णोः (१,२.३)
अर्थः— इडादिप्रत्ययो वा ङित्स्यात्। ऊर्णुनुविथ, ऊर्णुनविथ।

अच्-पराः → न्/द्/र् (संयोगादयः)

द्वित्वं न

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'ऊर्णु'धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते अदादयः)

| लोट् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ऊर्णौतु<br>ऊर्णोतु<br>ऊर्णुतात्<br>ऊर्णुताम् | ऊर्णुताम्<br>ऊर्णुवाताम् | ऊर्णुवन्तु<br>ऊर्णुवताम् |
| मध्यमः | ऊर्णुहि<br>ऊर्णुतात्<br>ऊर्णुष्व | ऊर्णुतम्<br>ऊर्णुवाथाम् | ऊर्णुत<br>ऊर्णुध्वम् |
| उत्तमः | ऊर्णवानि<br>ऊर्णवै | ऊर्णवाव<br>ऊर्णवावहै | ऊर्णवाम<br>ऊर्णवामहै |

ऊर्णु + आनि
ऊर्णो + आनि
ऊर्णवानि

ऊर्णु + त्
आ ऊर्णु + त्
और्णु + त्
और्णौ + त्
और्णौत्

ऊर्णुविता, ऊर्णविता।
ऊर्णुविष्यति, ऊर्णविष्यति।
ऊर्णौतु, ऊर्णोतु। ऊर्णवानि। ऊर्णवै॥

❖ गुणविधायकं विधिसूत्रम्—

सूत्रम्— गुणोऽपृक्ते (७,३.९१)

अर्थः— ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके। वृद्ध्यपवादः। और्णोत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। ऊर्णुवीत। ऊर्णूयात्। ऊर्णुविषीष्ट, ऊर्णविषीष्ट॥

| | | |
|---|---|---|
| और्णौत्<br>और्णुत | और्णुताम्<br>और्णुवाताम् | और्णुवन्<br>और्णुवत |
| और्णौः<br>और्णुथाः | और्णुतम्<br>और्णुवाथाम् | और्णुत<br>और्णुध्वम् |
| और्णवम्<br>और्णुवि | और्णुव<br>और्णुवहि | और्णुम<br>और्णुमहि |

# उभयपदिधातुषु 'ऊर्णु'धातोः प्रक्रिया



वृद्धिपक्षे

आ ऊर्णु इ स्+ ई त्
और्णौ इ स्+ ई त्
और्ण् आव् इ + ई त्
और्णावीत्

वृद्ध्यभावे ङित्वपक्षे

और्णुवीत्

ङित्वाभावे गुणः

और्णवीत्

❖ वा-वृद्धिविधायकं विधिसूत्रम्—

सूत्रम्— ऊर्णोतेर्विभाषा (७,२.६)

अर्थः— इडादौ सिचि वा वृद्धिः परस्मैपदे परे। पक्षे गुणः।

और्णावीत्, और्णुवीत्, और्णवीत्।
और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम्।
और्णुविष्ट, और्णविष्ट।
और्णुविष्यत्, और्णविष्यत्। और्णुविष्यत, और्णविष्यत॥

॥ इत्यदादयः ॥ २

# अदादिगणस्य परीक्षणम्

**१.शपो लुक् भवति—**

**क. अदादौ**

ख. भ्वादौ

ग. दिवादौ

घ. सर्वत्र

**२. एतेषु घस्लृँ कुत्र न भवति—**

क. लिँटि

**ख. लँङि**

ग. लुँङि

घ. सनि

**३. ‘अत्स्यति’ इत्यत्र दकारस्य तकारविधायकं सूत्रं किम्?**

**क. खरि च**

ख. वाऽवसाने

ग. झलां जशोऽन्ते

घ. सः स्यार्धधातुके

**४. अद्-धातुविषये इदं कथनम् असङ्गतं प्रतिभाति—**

क. ‘अद्धि’ इत्यत्र धित्वं ‘हु-झल्भ्यो हेर्धि’ इति सूत्रेण भवति।

**ख. ‘जक्षतुः’ इत्यत्र षत्वम् ‘आदेशप्रत्यययोः’ इति सूत्रेण भवति।**

ग. ‘आदत्’ इत्यत्र ‘अट्’ भवति।

घ. ‘अघसत्’ इत्यत्र शब्न भवति।

**५. तनोत्यादिष्वयं धातुर्नान्तर्भवति—**

क. तनुँ

ख. वनुँ

ग. घृणुँ

**घ. वृणुँ**

**६. ‘घ्नन्ति’ इत्यत्र इदं कार्यं न प्रवर्त्तते—**

क. उपधालोपः

ख. कुत्वम्

ग. झोऽन्तः

**घ. अनुस्वारपरसवर्णौ**

**७. ‘हनिष्यति’ इत्यत्र इडागमो केन—**

क. आर्धातुकस्येड्वलादेः

ख. क्रादिनियमेन

**ग. ऋद्धनोः स्ये**

घ. इडत्यर्तिव्ययतीनाम्

**८. हन्तु हतात्, हताम्.............?**

क. जहि घ्नन्तु

**ख. घ्नन्तु जहि**

ग. अहि हतात्

घ. हनाव हनानि

**९. 'जहि' इत्यत्र 'अतो हे' सूत्रं न प्रवर्त्तते अस्य मुख्यं कारणं किम्?**

क. हेर्लुक्

**ख. जस्यासिद्धत्वात्**

ग. कृताभीयत्वात्

घ. अष्टाध्य्या अपेक्षया परत्वात्

**१०. 'हन्' स्थाने वधादेशो भवति—**

क. लुँङि

ख. विधिलिँङि लुँङि

**ग. आशीर्लिँङि लुँङि**

घ. सर्वत्र

**११. 'आर्धधातुके' इदं सूत्रं वर्त्तते—**

क. विधिसूत्रम्

ख. अतिदेशसूत्रम्

**ग. अधिकारसूत्रम्**

घ. सञ्ज्ञासूत्रम्

**१२. इदं कथनमसङ्गतम्—**

**क. वधादेशोऽनदन्तः।**

ख. आर्धधातुके इति विषयसप्तमी।

ग. 'अवधीद्' इत्यत्राल्लोपस्य स्थानित्वान्न वृद्धिः।

ङ. 'असिद्धवदत्राभाद्' इति सूत्रस्याधिकारः ६.४.२२ तः ६.४.१७५ पर्यन्तं वर्त्तते।

**१३. 'उतो वृद्धिर्लुकि हलि' इति सूत्रेण वृद्धिर्न भवति—**

क. लुग्विषये

ख. उतः

ग. हलादौ पिति सार्वधातुके

**घ. अभ्यस्तस्य**

**१४. 'अयान्' इति रूपं वर्त्तते—**

क. युु-धातोः

**ख. या-धातोः**

ग. अय-धातोः

घ. इण्-धातोः

**१५. अदादौ 'पा' धातोः कस्मिन्नर्थे प्रयोगः—**

क. पानार्थे

ख. गमनार्थे

**ग. रक्षणार्थे**

घ. भक्षणार्थे

**१६. अदादौ विद्-धातोर्लॉटि इदं कार्यं न भवति—**

क. आम्

ख. गुणाभावः

ग. लौँटो लुक्

**घ. कृभ्वस्तेरनुप्रयोगः**

**१७. 'विदाङ्कुरुताम्' इत्यत्रात उत्वं केन सूत्रेण?**

**क. अत उत्सार्वधातुके**

ख. तनादिकृञ्भ्य उः

ग. पुगन्तलघूपधस्य च

घ. विदाङ्कुर्वन्त्वित्यन्यतरस्याम्

**१८. 'स्तः' इत्यत्र अस्-धातोरकारलोपः केन?**

क. संयोगान्तस्य लोपः

ख. तस्य लोपः

**ग. श्नसोरल्लोपः**

घ. अस्तेरल्लोपः

**१९. एतेष्वस्तेर्भूर्न भवति—**

क. लौँटि

ख. लृँटि

**ग. लँङि**

घ. लुँङि

**२०. 'यन्ति' इत्यत्र यणादेशः केन—**

**क. इणो यण्**

ख. इको यणचि

ग. एरनेकाचोऽसंयोगपूर्वस्य

घ. दीर्घ इणः किति

**२१. 'शेरते' इति रूपं वर्त्तते—**

क. शीङ्धातोर्लँट्येकवचने

**ख. शीङ्धातोर्लँटि बहुवचने**

ग. शीङ्धातोर्लँङ्येकवचने

घ. शीङ्धातोर्लृँट्येकवचने

**२२. गाङ्पक्षे रूपं न भवति—**

क. अध्यगीष्ट

ख. अधिजगे

**ग. अगात्**

घ. अध्यगीष्यत्

**२३. एतेषूभयपदिधातुरस्ति—**

**क. लिह्**

ख. अस्

ग. ख्या

घ. शी

**२४. 'आह' इति रूपं भवति—**

**क. लँटि**

ख. लोँटि

ग. लिँटि

घ. लँङि

**२५. 'ऊर् नु + अ' इत्यत्र द्वित्वं भवति—**

क. ऊर्

ख. र्नु

ग. णु

**घ. नु**